# अभिनवकाव्यम्



रचयिता–
जनमेजयः विद्यालंकारः

# अभिनवकाव्यम्

( श्री जनमेजय विद्यालंकार प्रणीतम् )

प्रकाशक :

**जनमेजय विद्यालंकार**

७/१८३ स्वरूप नगर, कानपुर।

१ जनवरी १९५९ मूल्य २॥)

# ❋ समर्पणम् ❋

जम्मूप्रदेशवास्तव्यः काश्मीरः पण्डितर्षभः ।
सारस्वतः पूजनीयः काशीनाथः प्रियो गुरुः ॥
प्रणम्यते स्मर्यते च प्रायशः प्रत्यहं मया ।
काव्यमेतच्चरणयोस्तस्यैव च समर्प्यते ॥

# निवेदनम्

शृण्वन्तु मे कृतिं सन्तः सदसद् व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥

❀

बहु मंस्येऽहमात्मानं विद्वद्भिरभिनन्दितम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥

❀

आपरितोषाद् विदुषां न साधुमन्ये प्रयोगविज्ञानम् ।
बलवदपि हि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥

❀

चीयते बालिशस्यापि सत्क्षेत्र पतिता कृषिः ॥

❀

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ॥

सतां वशंवदः
जनमेजयः विद्यालंकारः

# — अनुक्रमः —

# ❋ ईश्वरस्तुतिः ❋

(शार्दूलविक्रीडितम् छन्दः)

( १ )

वेदा यं पुरुषं निरन्तरमजं ध्यायन्ति गायन्ति च,
प्राणायामपरायणैश्च सततं यो गीयते योगिभिः ।
सोऽयं ब्रह्मशिवेश्वरप्रणवसत्कर्त्रादि शब्दैः स्मृतो,
नित्यं वः प्रददातु वाञ्छितफलं त्रैलोक्य नाथो हरिः ।।

( २ )

सूर्याचन्द्रमसौ निरन्तरमिमौ यस्याज्ञया धावतः,
आकाशक्षितिवन्हिवारिमरुतः स्वीयाः क्रियाः कुर्वते ।
यस्यादेशवशाद् गिरिः स्वशिरसा धत्ते हिमं शाश्वतम्,
देवानामपि देवदेवमखिलं वन्दामहे तं प्रभुम् ।।

( ३ )

लब्ध्वा यस्य कृपाकटाक्षमणुमप्यन्धोऽखिलं पश्यति,
मूको वक्ति सुखं श्रृणोति वधिरः पङ्गुर्गिरिं लङ्घते ।
रोगी स्वास्थ्यमुपैति किञ्च लभते वित्तं दरिद्रोजनः,
नौमीशं तमहं नतेन शिरसा सर्वात्मना सादरम् ।।

( ४ )

प्राग्दन्तप्रभवाद् ददाति नियतं दुग्धं शिशूनां कृते,
भूमौ व्योम्नि जले प्रयच्छति सदा यो भोजनं प्राणिने ।
न्यायं यः कुरुते दयाञ्च युगपत् सर्वेषु लोकेष्वपि,
ईशं तं शरणं प्रयात सुहृदो, नान्या गतिर्विद्यते ॥

( ५ )

बुद्ध्या यो न विचार्यते न मनसा विज्ञायते नेन्द्रियैः,
ईदृक्तामतियाति यस्तु भगवान् सर्वामियत्तामपि ।
दिक्कालावपि न प्रभू यमखिलं निर्देष्टुमीशं क्वचित्,
तं सर्वेशमनन्तशक्तिममरं याचेऽनुकम्पामहम् ॥

( ६ )

नाथ प्रेममय प्रसीद भगवन् बुद्धिं शुभां यच्छ नः,
विद्यां धैर्यमुपासनां त्वयि रतिं सिद्धिं प्रयच्छ प्रभो ।
साफल्यं परमं लभेमहि वयं सर्वेषु कार्येष्वपि,
सश्रद्धा च निरन्तरा स्थिरतमा भक्तिस्त्वयि स्यात्सदा ॥

# ❀ गीर्वाणगिरो गरीयस्त्वम् ❀

( गीतिः )*

( १ )

ज्ञानराशिस्तत्वसारः पुण्यसीमा पापहृत् ।
देववाणी राजतामस्मन्मुखे हृदि सर्वदा ॥

(२)

कालिदासो भारविर्भवभूतियास्कौ पाणिनिः ।
देववाणीमन्तरा ते नोपलभ्यन्ते क्वचित् ॥

(३)

याः समस्याः पीडयन्त्यखिलं जगत् किल साम्प्रतम् ।
साम्प्रतं तासां प्रतीकारं लभध्वं संस्कृतात् ॥

(४)

दर्शनं पातञ्जलं वैयासिकी वाग् ज्यौतिषम् ।
ज्ञान विज्ञानञ्च सर्वं संस्कृतादधिगम्यताम् ॥

(५)

यत्पुरा वैदेशिके राज्ये तिरस्करणं महत् ।
लब्धमासीद् देववाण्या साम्प्रतं तदसाम्प्रतम् ॥

---

*हे दयामय हम सबों को शुद्धताई दीजिए—इति हिन्दी छन्दोरीत्या गातव्येयं गीतिः ।

(६)

देवभाषे त्वां वयं वन्दामहे सेवामहे ।
ते प्रसादात् शाश्वतं ज्ञानं लभेमहि दुर्लभम् ।।

(७)

यच्च माधुर्यं मधुद्राक्षासुधाद्यतिशायि ते ।
देवभाषेऽन्यत्र तत्कुत्रापि नोपलभामहे ।।

(८)

देववाण्याः पाठनं पठनं यथा च लभेमहि ।
नस्तथा सौभाग्यमीशो जन्मजन्मनि दापयेत् ।।

# ❋ नगरग्रामौ ❋

( अनुष्टुप् छन्दः )

(प्रथमोऽध्यायः)

(१-२)

अथैकदा मर्त्यलोके विवादः समुपस्थितः ।
नगरग्रामयोः कस्य गौरवं कस्य लाघवम् ॥
नैको ऽपि हीनमात्मानमन्यस्मान्मन्यते क्वचित् ।
नैको ऽप्यन्यस्य माहात्म्यमङ्गीकर्तुं समुद्यतः ॥

(३-४)

अन्नदो जलदश्चाहं लोकानामस्मि पालकः ।
वर्षीयान् सत्ववांश्चाहमिति ग्रामो ऽभिभाषते ॥
विद्यायां धनधान्येषु स्वरूपे संस्कृतावहम् ।
गरीयो ऽस्मि वरीयोस्मीत्येषा नगर सम्मतिः ॥

(५-६)

एवं विवदमानौ तौ धर्माधिकरणं[1] गतौ ।
धर्माधिकारिणाञ्चापि मतिद्वैधमजायत ॥
विद्वांसो न्यायशीलास्ते ज्ञानविज्ञानशालिनः ।
लोकविश्रुतसद्भावाः लेभिरे नैकनिश्चयम् ॥

---

१ धर्माधिकरणं न्यायालयः

(७–८)

लोके ऽस्मिन्नेवमप्राप्य न्यायं नाप्येकनिश्चयम् ।
क्षणाय नगरग्रामौ निराशौ तौ बभूवतुः ॥
अथाकस्मात्तयोरेषा बुद्धिः प्रादुरभूत्तदा ।
ब्रह्माणं देवदेवेशं न्यायं याचावहे ऽधुना ॥

(९–१०)

ब्रह्मा हि सर्वलोकानां शरण्यो न्यायकृच्छुचिः ।
वेदवेदाङ्गतत्त्वज्ञः स नौ न्यायं विधास्यति ॥
एवं निश्चित्य मनसा पूज्यानापृच्छ्य यत्नतः ।
यात्रायै सम्प्रतस्थाते कृतस्वस्त्ययनावुभौ ॥

(११–१२)

दिव्यं विमानमारूढौ स्वर्गमासाद्य शोभनम् ।
नन्दने ऽपि वने नैव विश्रामं चक्रतुः क्षणम् ॥
तथैव यात्रां कुर्वाणौ ब्रह्मलोकदिदृक्षया ।
स्वर्गादपि गरीयांसं ब्रह्मलोकमुपागतौ ॥

(१३–१४)

ब्रह्मलोकगरीयस्त्वं पश्यन्तौ सर्वदिक्षु तौ ।
भगवन्तं महात्मानं ब्रह्माणं समुपस्थितौ ॥
भूलोकवासिनौ तौ तु ब्रह्मलोकमुपागतौ ।
वीक्ष्य ब्रह्मा क्षणायैव किञ्चिच्चिन्तातुरोऽभवत् ॥

(१५--१६)

क्षणाच्च स्वास्थ्यमासाद्य यावत्पश्यति तावुभौ ।
तावुभौ तत्क्षणादेव पादयोस्तस्य पेततुः ॥
श्रद्धया परयोपेतौ तद्दर्शनगतक्लमौ ।
रोमाञ्चितौ महाभागौ प्रणामं तस्य चक्रतुः ॥

(१७–१८)

श्रद्धातिरेकात्तावेवं पतितौ तस्य पादयोः ।
कृतकृत्यममन्येतामात्मानं भाग्यवत्तमम् ॥
तस्मिन् काले महर्षीणां सिद्धानाञ्चापि सा सभा ।
तावुभौ वीक्ष्य नितरां कौतूहलपराऽभवत् ॥

(१९–२०)

काविमौ कुत आयातौ किमिच्छन्ताविहागतौ ।
इति ब्रह्मसभा सर्वा औत्सुक्यं समुपाश्रिता ॥
कौतूहलपरान् सर्वान्वीक्ष्य तान् जगदीश्वरः ।
स्नेहेनोत्त्थापयामास पतितौ तौ स्वपादयोः ॥

(२१–२२)

उवाच स्निग्धया वाचा लोकानां प्रपितामहः ।
स्वागतं वां महाभागौ मर्त्यलोकादिहागतौ ॥
किमिति द्युतिमात्मीयां बिभ्रथो न यथा पुरा ।
साम्मनस्यं न पश्यामि युवयोरुभयोरपि ॥

(२३-२४)

वत्स, ग्राम, त्वदीयं तु परिशुष्कं मुखाम्बुजम् ।
वीक्ष्य मे मानसं तान्तं नितान्तं दूयतेतमाम् ।।
जहि भीतिं त्यज ग्लानिं ब्रूह्यागमनकारणम् ।
दुःखदैन्यादिकं यत्ते तत् साम्प्रतमसाम्प्रतम् ।।

(२५-२६)

स्वर्गादप्युन्नतं स्थानं विद्ध्येतन्नीरजस्तमः ।
नात्र मृत्युर्जरा नात्र कुतः शत्रुः कुतो भयम् ।।
नगर, प्रियवत्स, त्वं किमित्यद्यासि मन्युमत् ।
मदघूर्णितनेत्रत्वं विशेषात् त्वयि लक्षये ।।

(२७-२८)

सत्वेनाद्य परित्यक्तं रजसा महताऽऽविलम् ।
किमिदं ते मुखं तात न स्वस्थमिव लक्ष्यते ।।
कोऽयं ते विभ्रमस्तात यत् त्वमुन्नतकन्धरम् ।
सगर्वं तिष्ठसि पुरः त्रैलोक्याधिपतेर्मम ।।

(२९-३०)

न त्वहं मानकामोऽस्मि न मे द्वेष्योऽस्ति न प्रियः ।
अस्वस्थमिव वीक्ष्य त्वां मनो मे दूयतेतमाम् ।।

अतो दैन्यं च मन्युं च विहाय निखिलं युवाम् ।
यद् वृत्तं मर्त्यलोकस्य तत्सर्वं वक्तुमर्हथः ॥

(३१)

किञ्च वां करवाण्यद्य तद् ब्रूतां विगतज्वरौ ।
वित्तं मां सर्वलोकानां शरण्यं प्रपितामहम् ॥

# ❀ नगरग्रामौ ❀

( अनुष्टुप् छन्दः )

(द्वितीयोऽध्यायः)

(३२-३३)

एवं तस्य वचः श्रुत्वा चतुर्मुखसमीरितम् ।
ग्रामः किञ्चित्प्रणम्यैवं वचनं पुनरब्रवीत् ॥
भगवन् ! मर्त्यलोकेऽद्य मोहलोभमदादयः ।
विशेषेण प्रवर्तन्ते कामक्रोधादिभिः सह ॥

(३४-३५)

मात्सर्यमीर्ष्या युद्धानि दुर्भिक्षाणि विशेषतः ।
सर्वत्रैव प्रवृत्तानि तैर्जगद् दूयतेतमाम् ॥
अन्धे तमसि गर्ते वा धर्ममोक्षौ क्वचिद् गतौ ।
अर्थकामौ विराजेते सूर्याचन्द्रमसाविव ॥

(३६-३७)

नारदस्तु विशेषेण तत्सर्वं ते वदिष्यति ।
लोकानां वृत्तविज्ञाने भवताऽसौ नियोजितः ॥
यदर्थमहमायातो यच्च मे दुःखकारणम् ।
भगवन् ! तदशेषेण समासव्यासतः शृणु ॥

(३८-३९)

समक्षं भवतामेतन्नगरं यदुपस्थितम् ।
एतदेव महद्दुःखं मर्त्यलोकेऽकरोन्मम ॥
गरीयो मन्यते नित्यमात्मानमभिमानतः ।
तृणवल्लघुं च मां मत्वा तिरस्कारं करोति मे ॥

(४०-४१)

विशेषविद् भवांस्तस्मान्निर्णयं कर्तुमर्हति ।
नगर ग्रामयोः कस्य गौरवं कस्य लाघवम् ॥
इति ग्रामवचः श्रुत्वा देवाः सिद्धा महर्षयः ।
वेधसा सहिताः सर्वे किञ्चिच्चिन्तां प्रपेदिरे ॥

(४२-४३)

औत्सुक्यं विस्मयञ्चापि प्रपेदे निखिला सभा ।
ग्रामस्तु पूर्ववत्तातं वेधसं पुनरब्रवीत् ॥
ग्रामोऽहं सर्वलोकानामुपकारार्थमुद्यतः ।
न कदापि स्वसौख्याय यशोलाभाय वा यते ॥

(४४-४५)

यवगोधूमचणकमुद्गमाषतिलादिकम् ।
सर्वाण्यन्नानि लोकेभ्यः सर्वेभ्यः प्रददाम्यहम् ॥
अवश्यायं हिमं वृष्टिं झञ्झावातं महातपम् ।
लोकानामुपकारार्थं न किंचिद् गणयाम्यहम् ॥

(४६–४७)

प्रस्वेदाप्लुतसर्वाङ्गान् सीरोत्कषणतत्परान् ।
जेष्ठमासस्य मध्याह्ने किं भवान् नो न पश्यति॥
शीतेन वेपमानानामस्माकं यः परिश्रमः ।
हिमवत्सु प्रदेशेषु कस्तद् विस्मर्तुमर्हति ॥

(४८–४९)

सेवायै सर्वलोकानामन्नान्युत्पादयाम्यहम् ।
तत्सर्वमत्ति नगरं न च किंचिद्ददाति मे ॥
ममोपकारान्विस्मृत्य मां नित्यमवमन्यते ।
कृतघ्नत्वं महच्चास्य न भवान् क्षन्तुमर्हति ॥

(५०–५१)

धूर्तता च शठत्वं च दर्पं दम्भं कृतघ्नताम् ।
त्रिषु लोकेषु यत्पापं नगरं विदधाति तत् ॥
हिंसां विश्वासघातं च क्रूरतां कपटं छलम् ।
अनुक्तमपि यत्पापं नगरं विदधाति तत् ॥

(५२–५३)

एतैरेतादृशैश्चान्यैः पापैः सुबहुशः कृतैः ।
*क्लीबत्वमस्य संजातं पाणिनेरनुशासनात् ॥
विण्मूत्रसंग्रहो यस्तु प्रतिगेहं विधीयते ।
नगराण्यपवित्राणि जायन्ते तेन सर्वशः ॥

---

*व्याकरणानुसारं नगरशब्दः नपुंसके विद्यते । अतएत परिहासो विहितो ग्रामेण ।

(५४-५५)

प्रतारणपराः पापा भिक्षवस्तस्कराः शठाः ।
येषामन्या गतिर्नास्ति ते सर्वे नगराश्रिताः ॥
लुण्ठकाः वंचकाः ये च दम्भिनः पश्यतोहराः ।
चौराः साहसिकाः धूर्ताः सर्वे ते नगराश्रिताः ॥

(५६-५७)

न किञ्चिदपि कुर्वाणा अलसाः श्रमविद्विषः ।
परवित्तभुजो ये च ते सर्वे नगराश्रिताः ॥
वाक्छलं जीविका येषां प्रलपन्ति च ते बहु ।
पण्डितम्मन्यमाना ये ते सर्वे नगराश्रिताः ॥

(५८-५९)

सौन्दर्यं बहु मन्यन्ते न विद्यां न गुणानपि ।
प्रेयोमार्गाश्रिताः सर्वे नगरं समुपाश्रिताः ॥
व्यासेन मनुना चापि निषिद्धं पातकं महत् ।
नगरेण कृतं लोभात् महायन्त्रप्रवर्तनम् ॥ *

(६०-६१)

महायन्त्रकृतो धूमः शुद्धं वायुं प्रदूष्य च ।
सर्वेषामेव लोकानामहितायोपपद्यते ॥
अशान्तिर्महती लोके महायन्त्र समुद्भवा ।
प्रत्यहं वर्धमाना च सुखं सर्वं व्यपोहति ॥

---

*महायन्त्र=मैशीनरी, मिल, हिन्दी भाषायाम् ।

(६२-६३)

महायन्त्रप्रभूणान्तु जायते देहगौरवम् ।
प्रमेहाद्या महारोगाः जायन्ते देहगौरवात् ॥
मेदोवृद्धिर्विशेषेण तेषां समुपजायते ।
परिश्रमस्याभावेन स्वप्नासनसुखेन च ॥

(६४-६५)

श्रेष्ठिनो बहुवित्तास्ते दम्भाहङ्कारसंयुताः ।
परःसहस्रान् पुरुषान् दासीकुर्वन्ति मायया ॥
दासीभूतास्तु पुरुषाः मात्राधिकपरिश्रमाः ।
प्रपीड्यन्ते महारोगैर्बहुभिर्देहशोषजैः ॥

(६६-६७)

कार्याधिक्याच्छ्रमाधिक्यादल्पत्वाद्वेतनस्य च ।
न विश्रामं न वा निद्रां लभन्ते ते न भोजनम् ॥
युक्ताहारविहाराणामलाभेन प्रपीडिताः ।
इत्थमल्पायुषः सर्वे जायन्ते श्रमजीविनः ॥

(६८-६९)

परःशतानां श्रमिणामित्थं मुष्णन् धनादिकम् ।
* महायन्त्रप्रभुर्गर्वादात्मानं बहु मन्यते ॥
अन्यायश्च महानेषो यदेको लभतेऽखिलम् ।
अन्येषां श्रमजं वित्तं न कुर्वन् किमपि स्वयम् ॥

---

*महायन्त्रप्रभु=मिलमालिक इति हिन्दी भाषायाम् ।

(७०-७१)

अन्यायैः पीडितास्तैस्तैर्दुःसहैः श्रमजीविनः ।
विद्रोहान् विप्लवांश्चैव प्रायशः कुर्वते बहून् ॥
एतैरेव च विद्रोहैर्विक्षुब्धाः धनवत्तमाः ।
हिंसकाश्च नृशंसाश्च जायन्ते श्रमजीविषु ॥

(७२-७३)

इत्थमद्याखिले लोके न शान्तिर्विद्यते क्वचित् ।
भयं युद्धं च रोगाश्च प्रवर्तन्तेऽतिमात्रया ॥
तदेतन्निखिलं विश्वं विनाशोन्मुखमीक्ष्यते ।
त्रायस्व लोकान् भगवन् शरण्यस्त्वमसि प्रभो ! ॥

(७४-७५)

महायन्त्रप्रवृत्तिस्तु नगरेष्वेव जायते ।
सर्वेषामप्यनर्थानां नगरं मूलमुच्यते ॥
एतस्मात् कारणान्मन्ये नगरं पापदूषितम् ।
उपप्लवाय लोकानां धूमकेतुमिवोत्थितम् ॥

(७६-७७)

महायन्त्रप्रवृत्तिस्तु सर्वस्यास्यास्ति कारणम् ।
अविश्वासस्य युद्धस्य दुर्भिक्षस्य भयस्य च ॥
अस्य क्रूरस्य पापस्य मृत्युभूतस्य दुर्मतेः ।
नगरस्य त्वमेवाद्य निग्रहं कर्तुमर्हसि ॥

(७८–७९)

इति ग्रामवचः श्रुत्वा चिन्ताध्यानपरायणः ।
चतुर्मुखस्तदा ब्रह्मा चित्रार्पित इवाभवत् ॥
सा च सर्वा सभा दिव्या ग्रामस्याकर्ण्य भाषितम् ।
ध्यायन्ती तस्य वाक्यानि निश्चला सर्वतोऽभवत् ॥

# ❀ नगरग्रामौ ❀

( अनुष्टुप् छन्दः )

( तृतीयोऽध्यायः )

(८०–८१)

अथ ब्रह्मा समुद्वीक्ष्य सर्वांस्तान् मौनमाश्रितान् ।
नेत्रेङ्गितेन नगरं वक्तुमाज्ञापयच्छनैः ॥
प्रणम्य शिरसा देवं वेधसं प्रपितामहम् ।
आरेभे नगरं वक्तुं ह्रिया किञ्चिदवाङ्मुखम् ।

(८२–८३)

भगवन् ! मर्त्यलोके मे वीक्ष्य पूजां गरीयसीम् ।
मात्सर्यं प्राप्तवान् ग्रामः स्पर्धते च मया सह ॥
अहो ग्रामवटोर्धार्ष्ट्यं अहो ग्रामवटोर्मदः ।
भिक्षुकोऽयं न जानाति वाच्यावाच्यं शुभाशुभम् ॥

(८४–८५)

उच्छृङ्खलो बलीवर्दो ग्रामीणश्चैव मानवः ।
समशीलौ समाकारौ निर्बुद्धी हास्यतां गतौ ॥
सभ्यतां वेद न ग्रामो गत्यासनविधिञ्च न ।
यथेच्छं प्रचरत्येषो लोकाचारविवर्जितः ॥

(८६–८७)

लोकोक्तिः प्रथिता चेयं त्रिषु लोकेषु गीयते ।
"यदि वाञ्छसि मूर्खत्वं वस ग्रामे दिनत्रयम्" ॥
असंस्कृत शरीरोऽयमसंस्कृतमतिस्तथा ।
असंस्कृतरुचिश्चायं काव्यनाटक वर्जितः ॥

(८८–८९)

उटजे पर्णशय्यायां स्थण्डिले प्रस्तरेषुवा ।
शिलायां शुष्कभूमौ वा शेतेऽयं भाग्यदोषतः ॥
न समाचारपत्राणि, यानानि विविधानि न ।
नाभ्रंलिहानि हर्म्याणि, न प्रकाशश्च वैद्युतः ॥

(९०–९१)

व्यापारिणो न विविधाः पदार्था न मनोरमाः ।
न कौशेयादिवस्त्राणि, लभ्यन्ते ग्रामवासिभिः ॥
धूलिधूसरिते ग्रामे न लभ्यन्ते कदाचन ।
राजमार्गाश्च विविधाः शोभनाः प्रियदर्शनाः ॥

(९२–९३)

कृशकायोऽयमत्यन्तमप्रियं चास्य दर्शनम् ।
रोगाक्रान्त शरीरश्च लभते न चिकित्सकम् ॥
विद्यायां व्यवसाये च ललितासु कलासु च ।
ग्रामोऽयं नगराणान्तु कलां नार्हति षोडशीम् ॥

(९४-९५)

क्षुद्रबुद्धिः क्षुद्रधनः क्षुद्रदेहः क्षुधातुरः ।
महद्भिर्नगरैः सार्धं स्पर्धमानो विनंक्ष्यति ॥
तस्मादुन्मार्गगन्तारं प्रभूतावद्धभाषिणम् ।
भगवन् ! त्वमिमं ग्रामं मर्यादायां निवेशय ॥

(९६-९७)

इति तारस्वरेणोक्त्वा स्वमतं नगरं तदा ।
ब्रह्मणो निर्णयं श्रोतुमुपाविशदनातुरम् ॥
उपविष्टे तु नगरे ग्रामः सा च सभाऽखिला ।
किं ब्रह्मा वक्ष्यतीत्येवमौत्सुक्यं परमाश्रिता ॥

# ❁ नगरग्रामौ ❁

( अनुष्टुप् छन्दः )

( चतुर्थोऽध्यायः )

(९८–९९)

ततः सर्वेषु शान्तेषु मौनमाश्रितवत्सु च ।
वचः प्रश्रयगम्भीर मुवाच चतुराननः ॥
भवतोरुभयोरेव गुणदोषौ मया श्रुतौ ।
अनुक्तमपि यत् किञ्चित् तद्विजानामि योगतः ॥

(१००–१०१)

त्यक्त्वा बालिशतां तस्मात् परया श्रद्धयान्वितौ ।
युवामेकाग्रमनसा शृणुतं मे वचोऽमृतम् ॥
न दोषा एव लभ्यन्ते क्वचिदेकान्ततः स्थिताः ।
न गुणानेव पश्यामः क्वचिदेकान्ततः स्थितान् ॥

(१०२–०३)

गुणदोषौ प्रवर्तेते मिश्रितौ जगतीतले ।
त्रिभिः सत्त्वादिभिर्जातं सर्वं द्वन्द्वमयं जगत् ॥
एवमेव गुणाः सन्ति भवतोरुभयोरपि ।
दोषाश्च सन्ति बहवो ग्रामेऽपि नगरेऽपि च ॥

(१०४-१०५) 

न्यायानुकूलं भवतोरेकस्य जयघोषणात् ।
पराजयात् तथाऽन्यस्य न मे कार्यं प्रसिध्यति ॥
न केवलं न्यायकारी दयालुरपि चास्म्यहम् ।
तस्मात् तदेव वक्ष्यामि हितं स्यादुभयोर्यथा ॥



(१०६-१०७)

ग्रामस्य नगरस्यापि जनकोऽस्म्युभयोरहम् ।
तस्मादेकतरस्यापि न नाशं कर्तुमुत्सहे ॥
मन्ये श्रुत्वा भवद्भ्याञ्च लोकोक्तिः प्रथिता भुवि ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥



(१०८-१०९)

युवयोर्दर्शनाच्चाद्य स्मराम्यन्यां कृतिं मम ।
भवतोरुभयोः पूर्वं यत् किञ्चिज्जनितं मया ॥
विवादनिरताभ्याञ्च भवद्भ्यां सा तु विस्मृता ।
मे कृतिः प्रथमा लोके तां पुनःस्मर्तुमर्हथः ॥

(११०-१११)

युवाभ्यामुभयाभ्याञ्च ज्यायसीं तां कृतिं मम ।
अरण्यमभिभाषन्ते कान्तारमथवा वनम् ॥
पूर्वं वनं समुत्पन्नं ग्रामः पश्चादजायत ।
नगराणि ततः पश्चाल्लेभिरे जन्म भूतले ॥

(११२-११३)

वेदाः शास्त्राणि सर्वाणि वृहदारण्यकानि च ।
वनेष्वेव प्रजातानि नैतद् विस्मर्तुमर्हथः ॥
ग्रामादुद्विग्नमनसो नगराच्च प्रपीडिताः ।
शरण्यं वनमायान्ति विबुधाः साधवः सदा ॥

(११४-११५)

वर्तिष्येथे युवां यावद् वनाद् वैमुख्यमाश्रितौ ।
तावत्कालं न भवतोर्विवादः शममेष्यति ॥
तस्मात् स्वान्येव कर्माणि कुर्वाणौ सततं युवाम् ।
वनमेव स्वमादर्शं मन्येथां गतसंशयौ ॥

(११६-११७)

जनसम्मर्दविमुखौ शारीरश्रमतत्परौ ।
युवां कालं न लप्स्येथे विवादाय कदाचन ॥
जनसम्मर्दमेवाहं मर्त्यलोके विशेषतः ।
सर्वेषामप्यनर्थानां मूलं पश्यामि सर्वथा ॥

(११८-११९)

युद्धानि रोगाः कलहाः दुर्भिक्षाणि रजस्तमः ।
मर्त्यलोकस्य दुःखानि भवद्भ्यां कथितानि मे ॥
तेषां निखिलदुःखानां हेतुं लोभं वदाम्यहम् ।
तस्माल्लोभं परित्यज्य मर्त्यलोकः सुखीभवेत् ॥

(१२०-१२१)

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥
नातोऽधिकं विवक्षामि विवादे भवतोरहम् ।
अवश्यं तु मया वाच्यं मर्त्यलोकहिताय यत् ॥

(१२२-१२३)

जनसंख्याभिवृद्ध्या च मर्त्यलोकोऽद्य पीडितः ।
तत्पीडावारणं कर्तुमुपायं कथयाम्यहम् ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

(१२४-१२५)

तस्मात् कामोपभोगेषु मात्राकालौ विचारयन् ।
विदध्यात् संयमं विद्वान् यथाशक्ति यथाविधि ॥
संयमेन प्रवर्तध्वं दारेषु न यथेच्छया ।
लोकानां दुःखतप्तानां संयमः परमौषधम् ॥

(१२६-१२७)

आपदां प्रथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
एते सुखकराः पञ्च मर्त्यलोके विशेषतः ॥

(१२८-१२९)

आस्तिक्यं शौचसन्तोषौ स्वाध्यायश्च तपांसि च।
मनुष्यैः सेवनीयानि समस्तैश्च पृथक् तथा ॥
पशुषु कृपया युक्तै र्भवितव्यं गवादिषु।
परोपकारः सौख्याय पापाय परपीडनम् ॥

(१३०-१३१)

इमन्तु मम सन्देशं उभौ श्रावयतं युवाम्।
मर्त्यलोकेऽखिले शीघ्रं लोकानां हितकाम्यया ॥
प्रयातु नारदोऽद्यैव मर्त्यलोकं प्रति स्वयम्।
सन्देशस्यास्य विस्तारं तत्र कर्तुं यथाविधि ॥

(१३२-१३३)

इमन्तु मम सन्देशं त्रिषु लोकेषु यः पठेत्।
शृणुयाच्छ्रावयेद्वापि स मे प्रियतरो मतः ॥
इति वाचमुदीर्यैव ततो ब्रह्मा तिरोदधे।
मनस्याहितकर्तव्यौ भुवमाजग्मतुश्च तौ ॥

# ❀ भगवान् बुद्धदेवो विजयते ❀

( द्रुतविलम्बितम् छन्दः )

( १ )

समुदितैर्जगतां सुकृतैः शुभै,
र्भुवमिमां कृपया समुपागतः ।
विजयते भगवान् सुगतः कृती,
जनतया नतया परिवारितः ॥

( २ )

निरवधिः समयो विपुला दिशो,
न खलु यस्य यशो हरणे क्षमाः ।
स भगवान् सुगतोऽमरजीवनो,
हरतु वो दुरितान्यखिलान्यपि ॥

( ३ )

कपिलवस्तु न वस्तु भवादृशं,
किमपि पुण्यतमं भुवनत्रये ।
त्रिजगतामुपकारकरं शिवं,
प्रभवभूस्त्वमभूः सुगतस्य यत् ॥

( ४ )

शमदमैः सहितान् नियमान् यमान् ।
उपदिशन् करुणां मितभाषणम् ,
अभिभवन् रविमप्यमिताभया,
पुनरसौ नरसौम्यतमोऽभवत् ।।

( ५ )

न सरसा विषया न च यौवनं,
रतिसमा वनिता न मनोरमाः ।
न नृपता प्रभुता न भयादय-
स्तमपहर्तुमशक्नुवनुद्यमात् ।।

( ६ )

अयि निरन्तरयुद्धरता नराः,
शृणुत लोकगुरोर्वचनामृतम् ।
प्रशमयेन्न कदाप्यनलोऽनलं,
न कलहाः कलहान् शमयन्ति च ।।

( ७ )

भयकरं प्रखरं ज्वलनं यथा,
जयथ वारिभिरेव निरन्तरम् ।
सकलहां चिरयुद्धपरम्परां,
जयत तद्वदवश्यमहिंसया

(८)

कुलकृता गुरुता न भवेत् क्वचित्,
न लघुताऽभिमता मम जन्मना।
जगति सन्त्यखिलाः पुरुषाः समाः,
न कुरु मानमतस्त्यज दीनताम् ॥

(९)

गणयतात्मसमं पुरुषान् स्त्रियो,
जलचरानखिलान् पशुपक्षिणः।
बिलशयं बत कीटपिपीलिकं,
भवत नैव कदापि च हिंसकाः ॥

(१०)

स भगवान् सुगतोऽद्य शुभे दिने,
प्रमुदितैरखिलैरपि मानवैः।
क्षितितलाहितमस्तकमण्डलैः,
सबहुभक्ति यथाविधि वन्द्यताम् ॥

# ❀ दयानन्द षट्कम् ❀

( शिखरिणी छन्दः )

( १ )

महात्मानं लोकत्रयविदितकीर्तिं यतिवरं,
निधानं विद्यानामखिलतपसामालयमिव ।
श्रुतीनामावासं गुरुवरमिवाशेषजगतां,
दयानन्दं वन्दे क्षितितलनिलीनेन शिरसा ॥

( २ )

अहो धन्यः कोऽयं नववयसि योऽयं गृहसुखम्,
समृद्धं प्रेमाणं पितुरपि जनन्याश्च विपुलम् ।
परित्यज्य प्राज्यं धननिचयपूर्णञ्च भवनम्,
अरण्यानीं याति प्रखरतरवैराग्यवशतः ॥

( ३ )

अहो पारेगङ्गं प्रमुदित— विहङ्गं घनवनं,
हिमानीभिः शीतं नगपतिममुं प्रांशुशिखरम् ।
दधानः कौपीनं न खलु निदधानोऽपर पटम्,
न जानीमः कोऽयं प्रविशति तपस्तप्तुमभयम् ॥

( ४ )

प्रणम्यो लोकानां निधिरयमशेषस्य महसः,
समुद्धर्तुं लोकान् धृतपरिकरोऽयं मुनिवरः।
अयं विद्वानेकः प्रभवति जगच्छिक्षणविधौ,
दयानन्दोऽयं यो भुवि सकल पाखण्डदलनः॥

( ५ )

यमालोक्य प्रातस्त्यजति जनताऽघं निशिकृतं,
यदीया वाणी च श्रुतिपथगता हन्ति दुरितम्।
कथं वर्ण्यौ तस्य प्रखरतरपुण्यौ च चरणौ,
ययो रेषा मृत्स्ना हरति किल कृत्स्नामपि रुजम्॥

( ६ )

अनाकृष्टा भोगैर्नियतबहुरोगैर्यदि वयं,
तपः श्रद्धोपेताः सततमनुगच्छाम तमृषिम्।
ततोऽस्माकं जन्म व्रजतु किल साफल्यमभितः,
समृद्धं सौभाग्यं भवतु नितरां भारत—भुवः॥

# ❀ श्रद्धानन्द सप्तकम् ❀

( शिखरिणी छन्दः )

( १ )

अनाधृष्यो वीरः प्रखरतरपुण्यो बहुमतः ।
महाप्राणो वाग्मी निखिलतपसां यो निधिरभूत् ।
दयालुर्दीनानामभिमततरो यश्च सुहृदाम् ।
यतिः श्रद्धानन्दो विपुल-गुणवृन्दो विजयते ।।

( २ )

प्रशस्तं प्रांशुत्वं स च बहुमतो देहविभवः ।
सुदीर्घौ तौ बाहू गतिरपि च सा केसरिसमा ।
उरो व्यूढं पूज्यौ परमरमणीयौ च चरणौ ।
ऋते श्रद्धानन्दात् क्वचिदपि न दृष्टं तदखिलम् ।।

( ३ )

प्रणेता देशस्य प्रथमगणनीयो मतिमताम् ।
धुरीणो वीराणां भयकरतमो भारतरिपोः ।
महामान्यो नेता प्रतिदिनमभूदार्यसमितेः ।
नुमः श्रद्धानन्दं तममरसमानं यतिवरम् ।।

( ४ )

यदीयाः संकल्पाः सततमभवन् पूर्णसफलाः ।
प्रसादाः कोपा वा कथमपि न मोघाः समभवन् ।
दृढामिच्छाशक्तिं कथयति जनो यस्य महतीम् ।
कृती श्रद्धानन्दो न खलु न नमस्यस्त्रिजगताम् ॥

( ५ )

गिरिर्वा सिन्धुर्वा प्रियसुहृदमित्रं च बलवत् ।
स्तुतिर्वा निन्दा वा धनमधनता वातिगहना ।
विधातुं सन्मार्गात् प्रविचलितमेकं पदमपि ।
यतिं श्रद्धानन्दं क्षणमपि न शेकुः क्वचिदपि ॥

( ६ )

वनं घोरं, राजा परमविमुखः, क्वापि न धनम् ।
सहायो नैवासीत्, परिहसितवन्तो नयविदः ।
तथाप्येकः श्रीमान् प्रबलतरसत्त्वः स्थिरमतिः ।
*अहो मुन्शीरामो गुरुकुलमपूर्वं व्यरचयत् ॥

( ७ )

वसन् पारेगङ्गं कनकगिरिमूले गुरुकुले ।
दधानः प्रेमाणं तनयसमशिष्येषु विपुलम् ।
तपस्वी तेजस्वी निरवधि—यशस्वी विगतभीः ।
गुरुर्मुन्शीरामो विगलितविरामो विजयते ॥

---

*श्रद्धानन्द स्वामिनो नाम संन्यासापूर्वं मुन्शीराम इत्यासीत् ।

# ❋ श्रद्धानन्दः स्वामी विजयतेतमाम् ❋

(अनुष्टुप् छन्दः)

(१–२)

न विवेद भयं क्वापि यः सिंहसमविक्रमः ।
यस्य नामापि संस्मृत्य बलवान् जायते नरः ॥
विश्वासभूमिरार्याणां मातृभूमेश्च रक्षिता ।
नेताऽभूद् भारतीयानां भयदो भारतद्रुहाम् ॥

(३–४)

वज्रादपि कठोरः सन् कुसुमादपि यो मृदुः ।
क्षात्रेण तेजसा दीप्तः प्रदीप्तो ब्राह्मतेजसा ॥
व्यूढोरस्के वृषस्कन्धे शालप्रांशौ महाभुजे ।
दृष्टमात्रेऽपि लोकानां यस्मिन् श्रद्धा प्रजायते ॥

(५–६)

मातृकल्पः पितृकल्पो दयालुः करुणानिधिः ।
दीनानां गतिहीनानां यः शरण्यो महानभूत् ॥
त्यागिनां धुरि यस्तिष्ठन् तपस्विप्रवरोऽभवत् ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥

(७-८)

ऋषिकल्पं तमाचार्यं श्रद्धानन्दं महौजसम् ।
श्रद्धया परयोपेताः प्रणमामः पुनः पुनः ॥
अनुगन्तुं तमेवार्यं यथा च प्रयतेमहि ।
तथा दिशतु नो मार्गं भगवान् जगदीश्वरः ॥

# ❋ गान्धी सप्तकम् ❋

( शिखरिणी छन्दः )

( १ )

वपुष्मान् धर्मोऽयं प्रतिकृतिरहिंसामृदुतयोः,
शरण्यो दीनानां गतिरगतिकानां भुवि सताम् ।
निधिर्विस्रम्भाणां प्रतिनिधिरयं पुण्यतपसाम्,
"महात्मा गान्धी" यस्त्रिभुवननमस्यो विजयते ॥

( २ )

समुद्रो गाम्भीर्ये हिमगिरिरयं धैर्यगुणतः,
अयं पुण्ये त्यागे मुनिवरगणान् स्मारयति च ।
अहो लब्ध्वा स्पर्शं भुवि चरणयोरस्य च सकृत् ,
पवित्रं धर्मत्वं सततमिह कामोऽपि लभते ॥

( ३ )

कठोरोऽयं वज्रान्मृदुरपि च पुष्पान्निगदितः,
न भीतिं जानीते न भवति नृशंसः क्वचिदपि ।
स्वहस्ताङ्गुल्या यां दिशमदिशदेषो नरवरः ,
बलात्तामेवाशां सततमितिहासः प्रवहते ॥

( ४ )

मुखेऽस्याशीर्वादो वसति हृदि कारुण्यमतुलं,
स्वभावे माधुर्यं मनसि शुभचिन्ता त्रिजगताम् ।
पुनीतो विस्रम्भो विलसति नितान्तं नयनयोः,
प्रतिश्वासं श्रद्धा हरिचरणयोरस्य वसति ॥

( ५ )

अपि प्रादुर्भावो वरुणदिशि भानोर्यदि भवेत् ,
कदाचिद् वा प्राच्यां यदि रविरसावस्तमयते ।
स्वमर्यादां जह्याज्जलनिधिरकस्मात् क्वचिदपि,
परं वाणी त्वस्य क्वचिदपि निरर्था न भवति ॥

( ६ )

गजाश्वं, शस्त्रास्त्रं, कुशलसचिवान् नीतिनिपुणान्,
प्रभूतान् संभारान्, स्थलजलनभोगामि कटकम् ।
प्रतापस्तेजो वा यदपि परपक्षे स्थितमभूत् ,
अहिंसासत्याभ्यामजयदयमेकस्तदखिलम् ॥

( ७ )

अयं देशस्यास्य प्रभुरमररत्नं प्रियपिता,
परित्रातुं विश्वं प्रभवति विनाशाद् बहुभयात् ।
मनुष्यः संश्चायं सततमतिशेते सुरगणान् ,
अयं वीरो गान्धी त्रिभुवन-वरेण्यो विजयते ॥

# ❀ अस्त्युत्तरस्यां दिशि ❀

( गद्य काव्यम् )

अपि त्वं हिमालयं कदाचित् दृष्टवान्नवेति । दृष्टवांश्चेत्तर्हि भाग्यवानसि । न दृष्टवान्यदि तर्हि लोचनाभ्यां वञ्चितोऽसि । आश्चर्यकरतमोऽसौ प्रदेशः । अपहरति मनांसि, प्रीणातितमां हृदयानि, उत्पादयति साहसम्, तर्पयति चक्षूंषि । जन्मभूमिः काव्यानाम्, उत्पत्तिस्थानं शास्त्राणाम्, जनयत्यास्तिक्यबुद्धिम्, अपाकरोति नास्तिक्यम्, प्रसादयत्यात्मानम्, स्थिरीकरोति चेतः। विलासभूमिः प्रतिभायाः। अपहर्ता यक्ष्मादि रोगसमूहानाम्, संकेतस्थलं सर्वौषधीनाम्, मानदण्डः पृथिव्याः, पितामहः आर्यावर्तस्य । कण्टकबहुलोऽपि पुष्पबहुलः, प्रांशुतमोऽपि प्रपातमयः, उत्पादयत्यात्मविश्वासम्. आविष्करोति पौरुषम्, शिक्षयति धैर्यम्, किं बहुना यद् यद् विभूतिमत् सत्वं श्रीमदूर्जितमेव वा तत्सर्वमेव तत्र लब्धुं शक्यते ।

सत्वानामपि दृश्यते विकृतिमच्चितं भयक्रोधयोस्तत्रैव, दूरीकृताः खलु गुणैरुद्यानलताः वनलताभिः तत्रैव, मर्त्यलोकेऽस्मिन् यदि कुत्रापि स्वर्गोऽवलोकयितुं शक्यते

तत्रैव, अप्सरसो गन्धर्वाः किन्नराः यक्षाश्च तत्रैव । यदि परः शतान् वन्यान् गजानेकत्र दिदृक्षसे तर्हि गच्छ हिमालयम् । आरण्यकैः सिंहैः रमयितुमिच्छसि स्वचक्षुषी चेत् तर्हि व्रज गिरिराजम् । अदृष्टपूर्वान् कल्पनातीतांश्च विविधांस्तिरश्चः सरीसृपानवलोकयितुं यदि तेऽभिलाषस्तर्हि धन्यमात्मानं विधेहि स्थावरराजयात्रया । शैलेयनद्धेषु शिलातलेषूवेष्टुं ते कामश्चेत्तर्हि त्वरितं प्रयाहि हैमवतं प्रदेशम् । अन्योन्यप्रतिघातसंकुलचलत्कल्लोलकोलाहलैरुत्तालान् गम्भीरपयसः पुण्यान् सरित्सङ्गमान् साक्षाच्चिकीर्षसि चेत्तर्हि हिमवन्तमीक्षस्व ।

निसर्गभिन्नास्पदमपि तत्र द्वयमेकसंस्थं दरीदृश्यते भयं च सौन्दर्यञ्च । मनः शिलाहरितालगैरिकमयी तत्त द्धातुमयी च वसुन्धरा क्वाऽन्यत्रोपलभ्यतेऽन्यत्र हिमालयात्। पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी पवनः क्वाऽन्यत्र सेव्यतेऽन्यत्र हिमगिरेः। विना हिमशैलं क्वाऽन्यत्र भूमिः कुंकुमं प्रसूते । अनाद्यनन्तं हिमं, लोकातिगं प्रांशुत्वं, जगदतिशायि शैत्यं, लोकोत्तरं पवित्रत्वम्, चमर्यः, कस्तूरिकामृगाः, देवदारुः, एते चान्ये च दुर्लभाः पदार्थाः हिमालयमन्तरा नोपलभ्यन्ते कुत्रचिदपि व्यस्ता अपि किमुत समस्ताः ।

अस्मिन्नेव हि महाशैले धातुराद्या मानवी सृष्टिः

प्रादुर्बभूव । ऋचः सामानि यजूंषि च प्रथममत्रैव गीता-न्यासन् । तपोरताः महात्मानो महर्षयश्च जगतां तत्त्वं प्रागिहैवावजग्मुः । भगवानात्रेयः तत्सहोद्योगिनश्चात्रैव हिमवतः शुभे पार्श्वे ध्यानमास्थिताः जगतामुपकारार्थ-मायुर्वेदमाविश्चक्रुः । परःसहस्रगणपरिवारो भगवान् भूतभावनः शिवोऽत्रैव स्वविक्रमं प्रकटयामास । महाराजो भगीरथोऽत्रैव गङ्गां निचखान ।

अथ अधुना यदि भवति कश्चिदभिलाषोदयस्त्वयि स्थावरराजदिदृक्षायाः, तर्हि द्वित्रान् उपदेशानादेशान्स-न्देशान्वा दित्सामि, तच्छ्रूयताम् । इयं यात्रा हिमगिरौ पद्भ्यामेव विधेया, न तु वाहनेन । विरला एवैतदाचरन्ति । यो लाभः सम्प्राप्यते पद्भ्यां यात्रया, तस्य षोडशांशोऽपि नाधिगम्यते वाहनयात्रया । श्रद्धापयामि वः। सूक्ष्मनिरीक्षणं, विस्तृतमीक्षणं, प्रकृतिसौन्दर्यसाक्षात्कारः, क्रियात्मकः स्वा-ध्यायः, जनसम्पर्कः, उचितमात्रायां प्राणायामः, समुचितपरि-माणे व्यायामः, निर्भयता, हिंसकपशुसाक्षात्कारे बुद्धिस्फूर्तिः, प्रत्युत्पन्नमतित्वं, शरीरे लाघवम्, कर्म सामर्थ्यं, दोषाणां रोगाणाञ्च क्षयः, अग्निवृद्धिः, विविधगुप्तकन्दरादि-परिचयः, शीतोष्णवर्षादीनां सहनशक्तिः, बलम्, बहुज्ञता, एते चान्ये च बहवो लाभास्तेषामेव जायन्ते ये पद्भ्यां विदधति हिमालये यात्राम्, न तु वाहनपरतन्त्राणाम् ।

उपत्यकासु भीषणासु चारण्यानीषु च भ्रमणावसरे यदि सम्यङ् नास्ति केषाञ्चिदात्मविश्वासस्तर्हि ते शस्त्रादिकमपि सह नेतुमर्हन्ति, न तत्र कोऽपि दोषः। परन्तु मया तु भीषणास्वरण्यानीषूपत्यकासु च पौनःपुन्येनापि परिभ्रमता न कदापि शस्त्रास्त्रादि परिग्रहो विहितः। राजनियमनिषेधात् न कोऽपि कदापि मह्यं शस्त्रास्त्रादिकं प्रादात्, न च तेषां परिक्रये कदापि मम सामर्थ्यमासीत्। बहुशः पतितवानस्मि घोरासु विपत्तिषु। अनेकवारं प्राणसंशयोऽप्युपस्थितः। किन्तु सर्वदैवाहं केनाप्युपायेन रक्षामधिगतवान्। परन्तु सर्वैरपि नेत्थं विधेयम्। आत्मरक्षार्थंशस्त्रास्त्रादिप्रबन्धो विधातव्य एव यथाशक्ति यथानुकूलं यथोचितञ्च। शस्त्रास्त्रादीनामभावेऽपि दीपशलाका, प्रधावनम्, वृक्षारोहणम्, प्रतरणम्, आत्मगोपनम्, इत्येवमादि बहवः सन्त्युपायाः प्राणरक्षायाः, यदि कदाचिद्भयमुपस्थितं स्यात्। सर्वैः सम्मिलितैश्च महान् कोलाहलो विधेयः प्रांशुस्वरेण, कोलाहलमपि महान्तमाकर्ण्य भीताः निवर्तन्ते दूरं च पलायन्ते वन्याः हिंसकपशवः। एभिः समस्तैः व्यस्तैश्चोपायैः यथाकालं यथामति यथोचितं च स्वात्मा रक्षणीयो भवति वनपर्यटकैः।

हिमालयोपत्यकासु विशेषेणोपलभ्यन्ते हिंसकजन्तवः। उपत्यकास्वधित्यकासु च सर्वत्रैव पर्यटितुकामैः सर्वदा

बहुभिरेकत्रीभूय गन्तव्यम् । न चैकाकी तत्र यात्रां विदध्यात् । एकाकिनो यात्रा नीरसा कष्टबहुला भयप्रदा च भवति । बहुभिः सम्मिलितैः सुहृद्भिः सह हिमालये तस्यैकदेशे वा या यात्रा विधीयते सा सरसा हृदयाल्हादकरी नातिकष्टा भयरहिता च भवति । किं बहुना,

विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवःसम्यक् ।
यावद् व्रजति न भूमौ देशाद् देशान्तरं हृष्टः ॥

यस्यास्ति सर्वत्र गतिः स कस्मात् ,
स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः ,
क्षारं जलं कापुरुषाः पिबन्ति ॥

# ❋ सरदार वल्लभ भाई पटेल ❋

सम्राजमादित्यं दिलीपमधिकृत्य कविकुलकोकिलः प्राह,

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारम्भः आरम्भसदृशोदयः ।।

मनुष्येषु कः खलु श्रेष्ठो भवतीति विचिन्वानो महामतिर्विदुरो जगाद,

उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ।।

महापुरुषाणां लक्षणमभिदधानो महाकविर्माघः श्रीकृष्णसंसदि राजनीतिनिपुणस्योद्धवस्य मुखादिमान्यक्षराणि वाचयति स्म ।

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्राःभवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ।।

राजनीति शास्त्रस्य तत्त्वविदः कीदृशाः भवन्तीति व्यादिशन् महर्षिप्रवरो व्यासः कथयति ।

यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥

तदिदं सर्वमेव पदशः अक्षरशश्च श्रीमति प्रातः-स्मरणीयेऽस्माकं नेतरि पूज्यतमे पितृकल्पे श्रीमति वल्लभेभ्रातरि सङ्गच्छतेतमाम् ।

प्रातःस्मरणीयो महात्मागान्धी महोदयो येन प्रमुख शिष्येण शिष्यवानभूत्, इयं भारतवसुधन्रा येन नर-रत्नेन रत्नसूः प्रजावती राजन्वती चासीत्, यो हि विश्वास भूमिः सुहृदाम्, शरण्यः शरणार्थिनाम्, अभिमानभङ्ग हेतुर्मिथ्यागर्ववताम्, शत्रुर्भारतद्रुहाम्, धैर्येण हिमवा-निव, समुद्र इव गाम्भीर्ये, क्रुद्धस्य पुरतो यस्य देवता अपि बिभ्यति, सन्धिविग्रहयानासनसंश्रयद्वैधीभावानां षड्गुणानां सम्यक् प्रयोक्ता । सफलता यस्य दासीवभूव, यशो हि यं किङ्करवदुपचचार, कीर्तिर्यस्य दिगङ्गनाङ्गणगता, चाणक्यवन्नीतिनिपुणः, चन्द्रगुप्तमौर्यवन्नवराष्ट्रनिर्माता, कारणं भारतस्वातन्त्र्य लाभस्य, हेतुर्भारतस्वातन्त्र्य रक्षायाः, वज्रादपि कठोरः, कुसुमादपि मृदुः, स्पृहणीयं मित्रं भारत-सुहृदाम्, आश्रयभूतो दीनानाम्, उद्धर्ता आपद्गतानाम्, कोटिशो भारतीयाः यं पितरमिव मेनिरे, दुःखार्दिताः यं सहायकं सदैवाधिजिगमिषन्तिस्म, यस्योग्रेण तेजसा

भारतद्रुहो भारते विदेशेषु च सर्वत्रैव भीताः प्रवेपन्ते, कस्तस्य महाभागस्य श्रीमतो वल्लभभ्रातुर्गुणसमुदायं नैखिल्येन वक्तुम् लिखितुं श्रोतुं वा प्रभवेत् ।

अनन्तकल्पा तस्य गुणगणना, क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोपस्य गुप्त्यै, कश्चिदपि भाग्यहीनो नरो यस्तस्य प्रतिपक्षमङ्गीकृतवानसौ सर्वदैव सर्वथैव च पराजयमाससाद, यस्य खलु संरक्षकता स्वीकृता वल्लभभ्रात्रा तस्य ऋद्धिसिद्धी करतलगते बभूवतुः, यदपि कार्यमारब्धवानयं श्रीमान् वल्लभभ्राता तस्मिन्नेव कार्ये साफल्यमवश्यम्भावि ।आर्यचाणक्यवदनेनापि महानुभावेन अस्तोदयरूपं हानिलाभरूपं दौर्भाग्यसौभाग्यरूपं च फलं कोपप्रीत्योर्द्विषदि च विभक्तं सुहृदि च ।

वैयक्तिकमपि जीवनमस्य महाभागस्य परमोत्कृष्टमादर्शस्वरूपञ्चासीत् । शुद्ध जलवायुसेवनं, व्यायामः, जितेन्द्रियता, मितभोजनम् , ब्रह्मचर्यम् , एकपत्नी व्रतत्वम् , अपत्यस्नेहः, एते चान्ये चास्य वैयक्तिकगुणाः क्वान्यत्रोपलब्धुं शक्यन्ते । प्रतिभा, उत्साहः, अदीर्घसूत्रता, अनागतविधातृत्वम् , प्रत्युत्पन्नमतित्वम् , दृढनिश्चयत्वम् , इच्छाशक्तिः प्रखरतमा, अप्रधृष्यः सङ्कल्पः, अमोघो मन्त्रप्रयोगः, एते एतादृशाश्चान्ये सुदुर्लभा गुणास्तं श्रीमन्तं वल्लभभ्रातरं स्वनिवासस्थानमकार्षुः ।

कःखलु भाग्यनगरविजयं विस्मतु मर्हति । कथं* कश्चिद्विस्मरेत् तत् कार्यकौशलं यथा श्रीमान् वल्लभो-भ्राता बारदोलीप्रदेशे सफलं सत्याग्रहं चकार । बारदोली प्रदेशस्य सफलता न केवलं भारते किन्तु सर्वस्मिन्नपि भूमण्डले अद्वितीया निरुपमा च बभूव । महात्मागांधी महोदयोऽपि तदा अनुभवति स्म यत् गुणानां प्रकर्षो हि आधारवशो भवति । प्रतिभासम्पन्नो मेधावी शिष्यः कथं स्वगुरुमप्यतिशेते इति बारदोलीप्रदेशनिदर्शनेनावगन्तुं-शक्यते । यथा श्रीमतो गांधीमहोदयस्य सकाशात् सूत्ररूपेण राजनीतिमन्त्रं गृहीत्वाऽयं वल्लभो भ्राता तं मन्त्रं क्रियात्मकं विकसितं च विदधे तदाश्चर्यकरतमम् । उक्तं हि श्रीमता अग्निवेषेण महर्षिणा चरकसंहितायाम्. "प्रच-रणमिवभिक्षुकस्य बीजमिव कृषकस्य सूत्रं बुद्धिमतामल्पम-प्यनल्पज्ञानाय भवति, तत्र बुद्धिमतामूहापोहवितर्काः ।"

राजनीतिनैपुण्यं कथमासादितमासीदनेन श्रीमता, केन च मार्गेण प्रचलितवानयं श्रीमान् वल्लभो भ्राता, का वा सरणिः स्वीकरणीया भवति साफल्यलिप्सुभिः, इति सर्वं लिखन् कश्चित्कविर्मन्ये पूर्वस्मिन्नेव कस्मिंश्चित्काले श्रीमन्तं वल्लभभ्रातर मुद्दिश्यालिखत् ।

उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् शिशून्वर्धयन्,

* भाग्यनगरम् = हैदराबाद इति हिन्दी भाषायाम् ।

ओत्तुङ्गान् नमयन् नतान्समुदयन्विश्लेषयन् संहतान् ।
तीव्रान्कण्टकिनो मुहुर्नियमयन् म्लानान्मुहुः सेचयन्,
मालाकार इव प्रयोग निपुणो राजा चिरं नन्दति ।

अन्यच्च,

कोऽहं को देशकालौ समविषमगुणाः केऽरयः के स्वपक्षाः,
कुत्रेमे कार्ययोगाः रिपुसमसुहृदां कीदृशः शक्तिसारः ।
सम्पत्तौ कोऽथ बन्धुः प्रतिहतवचनस्योत्तरं किन्नु मे स्यात्,
इत्थं सत्कार्यसिद्धावविहितमनसो नावहास्या भवन्ति ।

उपर्युपरिष्टान्मृदुरिति प्रतीयमानाः श्रीमतो वल्लभ-भ्रातुरुपायाः अनागतविधातृत्वमयाः प्रत्युत्पन्नमतित्व-मयाश्च कथं राजनीतिक्षेत्रे महाबलाः सफलाश्च बभूवुरिति व्याख्यातुं प्रभवति निम्नलिखितः श्लोकः श्रीमतो महाभारतकर्तुः श्रीकृष्णाद्वैपायनस्य व्यासस्य । तद्यथा,

मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम्,
नासाध्यं मृदुना किञ्चित् तस्मात्तीव्रतरं मृदुः ।

तदिदानीमस्माभिर्भारतीयैः किं कर्तव्यम् । स्वर्गतो महाभागो वल्लभोभ्राता । सहायहीनाः शरण्यरहिताः अनाथकल्पाश्च वयमिदानीम् । इदानीमस्माभिः सर्वैरपि

तस्य श्रीमतश्चरणचिह्नानामनुकरणं विधेयम् । ये स्पृहणीयाः गुणास्तस्मिन् बभूवुस्त एव स्वेषु जीवनेष्वस्माभिः प्रयत्नेन धारणीयाः ।

उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥

# ❋ चारित्र निर्माणम् ❋

अद्यत्वे ह्यस्मद्देशे सत्यामपि स्वतन्त्रतायां, सत्स्वपि धनधान्यबाहुल्येषु, विद्यमानेष्वपि विद्यावयोभ्यां वृद्धतरेषु बहुषु महानुभावेषु, यदान्तरिकं किञ्चिद्द्विषादक्रोधमदमात्सर्यादि पारम्पर्यं दरीदृश्यते, अनुभूयतेतमाञ्च यदननुभूतपूर्वं दुःखं, तस्य को हेतुः का वा चिकित्सेति पौनः पुन्येन विचारयन्तोऽपि साधारणजनाः विशिष्टजनाश्च न कमपि निश्चयमधिगच्छन्तीति महान् खेदावसरः।

विविधविद्याधिगमं, शस्त्रास्त्रसुसज्जितनिर्भयवीरबहुलसैन्यं, व्यापारवाणिज्यपाटवं, समृद्धकोषञ्च, परमावश्यकं मन्यमानोऽप्यहं चिकथिषामि यत् सारभूतं यत्किञ्चिद् भवति श्रेष्ठं वस्तु सर्वेष्वेव राष्ट्रेषु तत्तु चरित्रमेव। यादृशमेव वैयक्तिकं चरित्रं प्राधान्येन भवति कस्मिंश्चिदपि राष्ट्रे, तादृशमेव तत्र राष्ट्रियं चरित्रं सर्वदैव सर्वथैव च पश्यामः।

श्रुतमस्माभिर्बहुवारं यत् पाश्चात्येषु पौरस्त्येषु वा समुन्नतेषु देशेषु प्रतिव्यक्ति प्रतिपुरुषं प्रतिस्त्रि प्रतिबालञ्च

चरित्रनिर्माणस्य महद्गौरवं स्वीक्रियतेस्म स्वीक्रियते चाद्यापि। समुन्नतेषु पाश्चात्य देशेषु भ्रामं भ्रामं ये प्रतिनिवृत्ताः स्वीयं भारतवर्षं ते हि मुहुर्मुहुः कथयन्ति यत्तत्र पारस्परिक विश्वासो महानस्ति, तेषां नित्यनैमित्तिक कार्येषु सत्यस्य वास्तविकः क्रियात्मश्च प्रचारः, तत्रत्याः वणिजः केवलं स्वोदरपूरणाय न तथा तत्पराः यथा भारतीयाः। राष्ट्रयामुन्नतिं यथा वहु मन्यन्ते तत्रत्याः न तथा वयं मन्यामहे। तेषां जीवने यत् सारल्यं समुपलभ्यते तस्य लेशोऽपि नात्र।

किन्तु नायमवसरो नैराश्यस्य। नैराश्यं हि राष्ट्रियेषु विषयेषु महतेऽनर्थाय कल्पते। सौभाग्यमिदमस्माकं यदस्मद्राष्ट्रस्य ये मुख्याः प्रणेतारः सन्ति तैरस्मिन्विषये न शयानैः स्थीयते। सन्ति ते जागुरूकाः। धर्मनिरपेक्षा अपि सन्तस्ते चरित्र निर्माण विषये कृतसततोद्योगाः। राष्ट्रपतिः श्रीमान् राजेन्द्रप्रसाद महोदयः क्रियासमभिहारेण प्रोक्तवान् तासु तासु सभासु यच्चरित्रनिर्माणं विधीयताम् चरित्र निर्माणं विधीयतामिति। अस्माकं प्रधानामात्यः श्रीमान् जवाहरलाल महोदयोऽपि वहुवार मूर्ध्ववाहुजगाद, एतद्देशीयैः सदाचारपरै भव्यमिति, भारतीयैः स्वचरित्रं शुद्धमनाविलञ्च विशेषेणाधुना कर्तव्यमिति।

वेदेषु पठामो मन्त्रमेकमस्मिन्विषये महोपयोगिनम्।

सत्यं बृहद् ऋतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥

तस्मादपि भारतीयाः भवद्भिरस्मिन्विषये दत्तावधानैर्भाव्यम्। राष्ट्रोदयाय राष्ट्ररक्षायै चापि विद्याशिक्षाभ्यामप्यधिका आवश्यकताऽस्ति सत्यस्य। सत्यम्, औदार्यम्, आर्जवम्, ओजः, स्वाध्यायः, तपः, बुद्धिः, सहानुभूतिः, स्वार्थत्यागः, इत्येतैः इत्येवमादिभिश्च गुणैः सच्चरित्रं निर्मीयते। चरित्रनिर्माणस्यातीवावश्यकतास्तीति यदा कथ्यते तदास्माकमेष एवाभिप्रायो भवति यदेते गुणाः स्वजीवने धारणीयाः। अस्माकं क्रियासु व्यवहारे चाप्येते गुणाः सम्यक् प्रस्फुटिताः सम्यग् विकसिताश्च भवेयुरिति एतावानेव निर्माणविषयश्चरित्रस्य।

इति श्री जनमेजय विद्यालंकार निर्मितम् अभिनवकाव्यं समाप्तम्।

# (हिन्दी अनुवाद)

## ❋ ईश्वर स्तुति ❋

( १ )

चारों वेद जिस अनादि अनन्त महाशक्ति का चिन्तन करते हैं और गुणगान करते हैं, योगी लोग प्राणायाम आदि साधनों से जिसका गान करते हैं, जिसे लोग अपनी अपनी रुचि के अनुसार ब्रह्मा शिव ईश्वर ओ३म् सत् कर्ता आदि शब्दों से स्मरण करते हैं, वह तीनों लोकों का स्वामी भगवान् परमेश्वर आप लोगों की सब इच्छाएं सफल करें।

( २ )

यह सूर्य और चन्द्र जिसकी आज्ञा से सदा दौड़ते रहते हैं, यह पञ्च महाभूत अर्थात् आकाश पृथ्वी अग्नि जल हवा जिसकी आज्ञा से सदा अपने अपने कार्य किया करते हैं, जिसकी आज्ञा से हिमालय पर्वत अपनी चोटियों पर अनादि काल से बरफ़ को धारण किए हुए है, देवों के भी देव उस परमेश्वर प्रभु को हम प्रणाम करते हैं।

( ३ )

जिसकी थोड़ी सी कृपा हो जाने पर अन्धा भी सब कुछ देखने लगता है, गूंगा बोलने लगता है, बहिरा सुनने लगता है,

लंगड़ा पहाड़ को लांघने लगता है, रोगी स्वस्थ हो जाता है, निर्धन अपने अभीष्ट धन को पा लेता है, उस परमेश्वर को मैं श्रद्धा से सिर झुकाकर प्रणाम करता हूँ।

( ४ )

दांत निकलने से पूर्व बच्चों के लिए जो दूध प्रदान कर देता है, आकाश में तथा जल में और स्थल में जो सब प्राणियों को भोजन देता है, जो सब प्राणियों पर दया भी करता है और साथ ही साथ न्याय भी करता है, उसी परमेश्वर की शरण में ऐ लोगो तुम सब जाओ, कोई अन्य व्यक्ति शरण देने वाला नहीं है।

( ५ )

बुद्धि जिसका विचार नहीं कर सकती, मन जिसे सोच नहीं सकता, इन्द्रियां जिसका प्रत्यक्ष नहीं कर सकतीं, जिसे हम "वह इतना है" अथवा "वह ऐसा है" इस प्रकार नहीं समझ सकते, जिसका स्वरूप दिशाओं के द्वारा अथवा काल के द्वारा निर्देश नहीं किया जा सकता, उस सर्वज्ञ सर्व शक्तिमान् सबके मालिक अजर अमर परमेश्वर से हम दया की भिक्षा मांगते हैं।

( ६ )

हे प्रेममय प्रभो, स्वामिन्, हम पर कृपा करो। हमें सद्बुद्धि प्रदान करो। विद्या धैर्य उपासना भक्ति और सिद्धि हमें दीजिए। हम अपने सब कार्यों में सदा सफल हों। आप में हमारी सच्ची श्रद्धा और स्थिर भक्ति सदा बनी रहे।

# ❀ गीर्वाणगिरो गरीयस्त्वम् ❀

(संस्कृत का महत्व)

( १ )

संस्कृतभाषा, जो ज्ञान का अक्षय भण्डार है, जिसमें तत्व और वास्तविकता प्रचुर परिमाण में उपलब्ध हैं, जिसके अध्ययन से महान् पुण्य प्राप्त होता है और पापों का क्षय होता है, सदैव हमारे मुखों में और हृदयों में विराजमान रहे।

( २ )

कालिदास भारवि भवभूति यास्क पाणिनि तथा ऐसे अन्य अनेक विद्वानों का साक्षात्कार केवल संस्कृत में ही हो सकता है, अन्यत्र कहीं नहीं।

( ३ )

आज संसार जिन बड़ी बड़ी समस्याओं में परेशान हो रहा है, उन सब समस्याओं का ठीक ठीक समाधान संस्कृत के ग्रन्थों में ही पहिले से लिखा हुआ है। जो चाहो कि वह समस्याएं हल हो जावें तो उपाय संस्कृत के ग्रन्थों में ढूंढो।

( ४ )

महर्षि पतञ्जलि कृत योगशास्त्र, महर्षि व्यास कृत महाभारत आदि ग्रन्थरत्न, ज्योतिष, सम्पूर्ण ज्ञान, सम्पूर्ण विज्ञान, संस्कृत साहित्य को पढ़कर प्राप्त करो।

( ५ )

विदेशियों के राज्य में संस्कृत ने चिरकाल तक घोर अपमान पाया है, यह बड़े खेद की बात है। अब स्वतन्त्र भारत में वही अपमान होना ठीक नहीं।

( ६ )

हे परमपूज्य संस्कृत देववाणी, हम तुझे प्रणाम करते हैं, हम तेरी सेवा करते हैं, तेरी ही कृपा से हम दुर्लभ ज्ञान को पावें जो सत्य है और नित्य है।

( ७ )

हे देववाणी संस्कृत, तुम्हारी जो अनुपम लोकोत्तर मिठास है वह शहद अंगूर अमृत आदि सब प्रसिद्ध मीठी वस्तुओं से भी अधिक है, तुम्हारे अतिरिक्त वह मिठास अन्यत्र कहीं नहीं मिल सकती।

( ८ )

हे ईश्वर, हे जगदीश्वर, तुम कृपया जन्म जन्मान्तरों में भी हमें ऐसा सौभाग्य प्रदान करना कि हमें संस्कृत का पढ़ना पढ़ाना सदा उपलब्ध होता रहे।

# ❀ नगर ग्रामौ ❀

प्रथम अध्याय

( नगर और गांव )

(१–२)

एक बार मर्त्यलोक में यह विवाद उठ खड़ा हुआ कि शहर और गाँव में कौन बड़ा है तथा कौन छोटा है। उन दोनों में से कोई भी अपने को छोटा मानने को तैयार न था और न ही दूसरे को बड़ा मानना चाहता था।

(३–४)

ग्राम का कहना था कि मैं संसार को अन्न देता हूँ, जल देता हूँ, संसार को पालता हूँ, पहिले मैं पैदा होने से ज्येष्ठ मैं ही हूँ, बलशाली भी मैं ही हूँ। परन्तु नगर कहता था कि मैं विद्वान हूँ, धन दौलत मेरे पास है, रूप मेरा अधिक सुन्दर है, सभ्यता में मैं उच्च हूँ, सर्वत्र मैं ही बड़ा माना जाता हूँ।

(५–६)

इस प्रकार विवाद करते हुये वह दोनों ही न्यायालय में गए। उनका विवाद सुनकर न्यायाधीश लोग भी चकरा गए, उनमें एक प्रकार का मतभेद पैदा हो गया। यद्यपि कचहरी के न्यायाधीश लोग विद्वान् थे, ज्ञान विज्ञान को समझते थे, उनकी निष्पक्षता भी जगत्प्रसिद्ध थी, तो भी वह कुछ निर्णय न कर सके।

(७–८)

इस प्रकार इस संसार में कुछ निर्णय न पाकर वे दोनों, नगर और गाँव, अपने फैसले के विषय में लगभग निराश हो गए। फिर अकस्मात् ही उनके मन में यह विचार आया कि चलो हम लोग ब्रह्मा जी के पास चलकर उनसे फैसला करवा लें।

(९–१०)

उन्होंने सोचा कि ब्रह्मा जी सब लोकलोकान्तरों के शरण-दाता हैं, न्यायाकारी हैं परम पवित्र हैं, सब वेदशास्त्रों के मर्म को समझते हैं, वे ही हमारा न्याय कर देंगे। ऐसा सोचकर दोनों, नगर और ग्राम, ने अपने बड़े बूढ़ों से आज्ञा ली और स्वस्ति वाचन मन्त्रों का पाठ करके ब्रह्मलोक की अपनी यात्रा प्रारम्भ कर दी।

(११–१२)

उन्होंने एक दिव्य विमान पर चढ़कर यात्रा की। स्वर्ग पहुँचे, नन्दन वन भी देखा, किन्तु वहाँ विश्राम नहीं किया। उनका उद्देश्य तो ब्रह्मलोक पहुँचना था, अतएव कुछ ही काल में वह स्वर्ग से भी श्रेष्ठ ब्रह्मलोक में पहुँच गए।

(१३–१४)

सब तरफ़ फैली हुई ब्रह्मलोक की महत्ता को देखते हुए वह दोनों सीधे ब्रह्मा जी के दरबार में पहुँच गए और ब्रह्मा जी के दर्शन किए। जब ब्रह्मा जी ने उन्हें देखा कि यह लोग तो मर्त्य लोक के रहने वाले हैं तब उन्हें बड़ी चिन्ता हुई। वह सोचने लगे कि वह लोग क्यों मर्त्यलोक से यहाँ आये हैं।

(१५–१६)

थोड़ी ही देर में ब्रह्मा जी ने अपने को सँभाल कर ज्यों ही स्वस्थ होकर उनको ध्यान से देखा त्यों ही वह दोनों, नगर और

गाँव, ब्रह्मा जी के चरणों पर गिर पड़े। उस समय वह दोनों ही श्रद्धालु अपने को कृतकृत्य समझने लगे, उनकी सब थकावट दूर हो गई, वे रोमाञ्चित हो गए, इस प्रकार उन्होंने ब्रह्मा जी को प्रणाम किया।

(१७-१८)

ब्रह्मा जी के चरणों में पड़े हुए उन दोनों ने श्रद्धा भक्ति के कारण अपने को परम भाग्यशाली और पूर्ण कृतार्थ माना। ब्रह्मा जी की वह सारी सभा, जिसमें बड़े-बड़े सिद्ध महात्मा लोग भी उपस्थित थे, उन दोनों को देख अत्यन्त कौतूहल से परिपूर्ण हो गई।

(१९-२०)

सारी ब्रह्मसभा में यही अचरज व्याप्त हो रहा था कि यह दोनों कौन हैं, कहाँ से आए हैं, क्या चाहते हैं। ब्रह्मा जी ने जब अपनी सारी सभा को इस प्रकार कौतूहल से परिपूर्ण देखा तब अपने चरणों में गिरे हुए उन दोनों नवागन्तुकों को बड़े स्नेह से ऊपर उठाया।

(२१-२२)

फिर परम स्नेह से भरी वाणी में लोकपति ब्रह्मा जी बोले,—हे मर्त्य लोक से आने वाले दोनों सज्जनो! तुम्हारा स्वागत है। परन्तु क्या कारण है कि आज तुम दोनों बिलकुल निस्तेज मालुम पड़ रहे हो। तुम्हारे चेहरों से कुछ ऐसा प्रतीत हो रहा है कि शायद तुम दोनों में मित्रता नहीं है।

(२३-२४)

बेटा ग्राम, तुम्हारा यह मुखकमल जो आज बिलकुल सूखा और निस्तेज हो रहा है, मेरे मन में बहुत चिन्ता पैदा कर रहा है।

अब तुम ग्लानि को छोड़ दो, अपने आगमन का कारण मुझे बताओ, अब तुम दीनता उदासीनता दुःख आदि का बिलकुल भूल जाओ।

(२५-२६)

यह ब्रह्मलोक है, मर्त्यलोक नहीं। यह स्थान स्वर्ग से भी श्रेष्ठ है, रजोगुण और तमोगुण यहाँ नहीं होते, यहाँ बुढ़ापा नहीं होता, मृत्यु नहीं होती, यहां न कोई भय है न कोई शत्रु। और हे बेटा नगर, आज तुम कुछ रुष्ट कुछ क्रुद्ध से क्यों दीख रहे हो, तुम्हारी आंखें कुछ नशीली नशीली सी क्यों हो रही हैं।

(२७-२८)

तुम्हारे चेहरे पर सात्विक लक्षण नहीं दीख रहे, रजोगुण के चिन्ह स्पष्ट प्रकट हो रहे हैं, क्या तुम कुछ अस्वस्थ हो। और यह क्या बात है कि मुझ त्रिलोक पिता के सामने भी तुम घमण्ड के साथ गर्दन ऊँची करके उद्धततापूर्वक खड़े हो।

(२९-३०-३१)

मुझे किसी से सम्मान पाने की इच्छा नहीं है, न मुझे कोई प्रिय है न अप्रिय। किन्तु तुमको इस प्रकार अस्वस्थ सा देखकर मैं दुःखी हो रहा हूँ। इसलिए तुम दोनों अब दीनता और क्रोध को छोड़ दो और मर्त्य लोक के सब समाचार मुझे विस्तारपूर्वक बतलाओ। यह भी बतलाओ कि तुम लोग क्या चाहते हो, डरो नहीं, तुम यह बात भली प्रकार हृदयङ्गम कर लो कि मैं तीनों लोकों का प्रपितामह हूँ, सब को शरण देने वाला हूँ।

---

# ❀ नगर ग्रामौ ❀

द्वितीय अध्याय

( नगर और गांव )

(३२–३५)

इस प्रकार ब्रह्मा जी के बचनों को सुनकर "ग्राम" ने झुक कर उन्हें प्रणाम किया और निम्नलिखित प्रकार से अपना कथन प्रारम्भ किया। "हे महाराज, मर्त्यलोक की तो आजकल बहुत दुर्दशा है। काम, क्रोध, लोभ, मोह, मात्सर्य, ईर्ष्या, द्वेष, अहकार का सर्वत्र बोलबाला हो रहा है। भयङ्कर युद्ध हो रहे हैं। दुर्भिक्ष पड़ रहे हैं। इन्हीं सब हेतुओं से मर्त्यलोक में घोर दुःख फैला हुआ है। वहां सर्वत्र हाहाकार मचा हुआ है। धर्म और मोक्ष तो न मालुम कौन से अन्धेरे में भागकर छिप गए हैं या किसी गहरे गढ़े में जा छिपे हैं। काम और क्रोध की ही सर्वत्र तूती बोल रही है, सर्वत्र इन्हीं का जय जयकार हो रहा है।

(३६–३९)

लोक लोकान्तरों का सब हालचाल जानने के लिये आपने नारद जी को नियुक्त किया हुआ है, इसलिए सब बातें विस्तार से वह ही आपको बतलायेंगे। मुझे जो दुःख है और मैं खास तौर पर जिस कारण से आपकी सेवा में आया हूँ—सो सब कृपया विस्तार से सुनिए।

यह "नगर" जो आपके सामने खड़ा है, इसी ने मर्त्यलोक में सबसे अधिक अन्धेर मचाया हुआ है, इसी ने मुझे भी बहुत

दुःख दिया है। अपने घमण्ड में चूर होकर यह मुझे हमेशा अपमानित किया करता है। अपने को बहुत बड़ा मानता है और सूखे तिनके के समान मुझे हलका और नाचीज़ तुच्छ समझता है।

(४०-४३)

"हे ब्रह्मा जी, आप ही सब मामलों को सुनकर हमारा निर्णय कीजिए कि ग्राम और नगर में कौन बड़ा है और कौन छोटा। आप जैसा निष्पक्ष न्याय करने वाला भला और कौन हो सकता है।" ग्राम के इन वचनों को सुनकर स्वयं ब्रह्मा जी और उनकी सभा कुछ देर के लिए सन्नाटे में आगए। सब ऋषि मुनि लोग भी जो उस सभा में बैठे थे, कुछ क्षणों के लिए चिन्ता में पड़ गए। तदनन्तर अपने भाषण को जारी रखते हुए ग्राम ने पुनरपि ब्रह्मा जा को सम्बोधन कर के कहना शुरू किया। 'देखिए महाराज, मैं ग्राम हूँ—मैं सदा ही संसार के उपकार के लिए उद्यत रहता हूँ—न मैं कभी अपने आराम की परवाह् करता हूँ न कभी प्रतिष्ठा और नामवरी चाहता हूँ।

(४४-४७)

जौ, गेहूँ, चने, मूंग, उड़द, तिल आदि सब अन्न मैं सारी दुनियां को देता हूँ। मैं दुनियां का उपकार करने में सदा तत्पर रहता हूँ और बरफ़ वर्षा गर्मी ओस आंधी धूप किसी भी मुसीबत की परवाह न करके लोकोपकार करता रहता हूँ। हे भगवन्—क्या आप देखते नहीं हैं कि हमारा सारा शरीर पसीने से सराबोर हो जाता है तब भी हम लोग ज्येष्ठ महीने की गर्मी में हल चलाते रहते हैं। क्या आपको पता नहीं है कि बरफीले प्रदेशों में हम लोग ही सरदी से कांपते रहते हैं और खेती में परिश्रम किया करते हैं, हमारे इन कार्यों को कौन भूल सकता है।

